Tel : "Samskrutam"          दूरध्वनिः - "संस्कृतम्"

वाणीं भजत गैर्वाणीम् !

# गैर्वाणी

## मासिकी पत्रिका

संस्कृतभाषाप्रचारिणी सभा, चित्तूरु. (आं. प्र.) भारतम्.

संपुटः १२  15 th NOVEMBER 1974  क्रमांकः ११



आनन्द-कार्तिकाङ्कः  शकाब्दाः १८९६  मूल्यम् ०–५० पैसाः

# विषयसूची




१. प्रतिज्ञा १
२. संस्कृतस्य राष्ट्रभाषात्वं युज्यते वा ? (सम्पादकीयम्) २
३. संस्कृतभाषाप्रचारिणीसभायाः आयव्ययप्रदर्शिनी ५
४. भिन्नरुचि र्हि लोकः ९
५. शरद् – ऋतुः १०
६. प्रणुतिस्वराः ११
७. धर्मसिन्धुपत्रिकायाः आविष्करणम् १२
८. सुगात्र्याः पातिव्रत्यम् १३
९. नारदविजयम् १७
१०. श्रीवेङ्कटेशस्तोत्रमाला १९
११. आनन्द - दक्षिणायनपरीक्षाफलानि २१
१२. परीक्षाफलसारिणी २५
१३. आनन्द - दक्षिणायनपरीक्षासु उपयुक्तानि केन्द्राणि-६२ २६
१४. Order of the Commissioner Endowments, Hyderabad २७
१५. गान्धीकथा २८
१६. अभिनववासवदत्ता –








# प्रतिज्ञा

'स्फूर्तिश्रीः'

संस्कृतम् मम मातृभाषा
संस्कृतम् मम शिरोभूषा ।
संस्कृतम् मम जीवसारं
संस्कृतम् मम सदाधारं ।।

सुलभ सुलभं ललित ललितं
भव्यसुन्दर भाव कलितं ।
सारवत् सारस्वत युतं
शास्त्र विहितं जगद् विनुतं ।।

सर्व गोष्ठी समावेशाः
सन्तु संस्कृत वाङ्निवेशाः ।
सर्व नागर सत् प्रसंगाः
सन्तु संस्कृत वाक् तरंगाः ।।

प्रकाशन्ताम् सर्व वेश्मसु
प्रभापूर्ण स्वर्ण शब्दाः ।
कुर्वतां भुवि सुधावर्षाः
सतत फलदाः संस्कृताब्दाः ।।

भाषणे वा लेखने वा
पठन पाठन विधाने वा ।
संस्कृतं मम साधनीयम्
प्रतिज्ञा मम पालनीया ।।



# सम्पादकीयम्

## संस्कृतस्य राष्ट्रभाषात्वं युज्यते वा ?

संस्कृतमिति पदे एव माधुर्यं सौन्दर्यं च वर्तते । सम्यक् परिष्कृतं पवित्रमिति च ज्ञायते । न केवलं भारतीयभाषाणां, किन्तु जगति वर्तमानानां निखिलानामऽपि भाषाणां संस्कृतमेव मूलभूतमिति निश्चिप्रचमेव । विशेषतः भारतीयानामिद मनादिसिद्धं मूलधनं वर्तते । स्वतन्त्रतामापन्नस्य देशस्य सकलस्याऽपि स्वतन्त्रभाषा वर्तत एव । अस्माकं भारतस्य राष्ट्रभाषा हिन्दी त्युच्यते । परन्तु भारतदेशः स्वतन्त्रीभूय पञ्चविंशत्यधिकवर्षा अभवन् । किन्तु अधुनाऽपि भाषादास्य मस्मा न्न मुञ्चति । इदानीमपि आंग्लभाषा यथापूर्वमेव राराजते । तद्भाषायाः परित्यागे अस्माकं जीवनं कुण्ठितं भवेदिति भीतिर्विज्ञान् न त्यजति दैवदुर्विपाकात् । भारतीयानां भाषा भारती भवितुमर्हति "ब्राह्मीतु भारती भाषा गीर्वाग्वाणी सरस्वती" इत्यमरकोशतः भारतीयानां भाषा भारतीति ज्ञायते । संस्कृतस्यैव नामान्तरं भारतीति तर्क्यते । यावता कालेन संस्कृतं राष्ट्रभाषापदवीं नारोहति, तावदस्माकं भाषादास्यं न बिमुञ्चत्येव । देवताबुद्धचा वयं भाषां पूजयामः संस्कृतं कस्मिन् शताब्दे समुत्पन्नं कदा वा प्रवृद्धं इत्यादिकं निश्चेतुं न कोऽपि विमर्शकः समर्थो भवति । यत स्संस्कृतस्य परमात्मव दनादित्वात् । स्वत उत्पन्ना वेदा अस्मिन् संस्कृते वर्तन्ते । आद्यन्तरहितः परमेश्वरः चतुर्दशव्या-

करणसूत्राणां स्मर्ता । अज्ञातकालदेशापाणिन्यादयः व्याकर्तारः । बहुकालात् परिपूर्णसौष्ठवमेत्य विराजमानं संस्कृतम् । नानाविधपुराणानि, धर्मशास्त्राणि, वेदवेदांगानि जनस्य ज्ञानविज्ञानदायकानि विलसन्ति । भारते नानाविधभाषाभाषिणः जनाः वर्तन्ते । आसेतुहिमाचलं वर्तमानैः जनैः नित्यनैमित्तिकादिषु, शुभाशुभकार्येषु, व्रतादिषु च संस्कृतमेव उपयुज्यते। तत्र कारणं किमिति विचारे कृते - एवं फलति - सर्वैः भाष्यमाणाभ्यः, भाषाभ्यः अस्मिन् संस्कृते वैशिष्टयं वर्तते । अत एव संस्कृतमाश्रित्य क्रियमाणानि सकलानि सफलानि भवन्तीति अस्माकं पूर्वेषामाशयः। देवतोद्देश्यकत्वेन संस्कृतमाश्रित्य क्रियमाणानि तैर्देवैः संस्कृताभिज्ञैः सुलभं ज्ञातुं शक्यते । अपि च क्षिप्रमेवास्माक वाञ्छितान्यपि निर्वर्तयन्ति । विविधभाषाभाषिणामपि सम्बन्धसौहार्दादीनि संस्कृत मेव जनयति । विविधप्रान्तेषु कोणेषु च इदानीमपि संस्कृतं विराजत एव । तद्ज्ञाः बहवो वर्तन्त एव ।

पूर्वस्मिन् कालेऽपि भोजश्रीहर्षविक्रमादिमहाराजानां कालेपीदं संस्कृतं राजभाषा जनसामान्येन भाष्यमाणा भाषा चासीदिति निर्णेतुं बहवो हेतवः सन्ति । आन्ध्रभोज इति प्रख्यातिं गतवतः कृष्णदेवरायस्य कालेऽपि आन्ध्रभाषाया स्समतया संस्कृतमपि समादृतमिति ताभिस्ताभिः कथाभि र्विज्ञातुं शक्यते । यतः संस्कृतं विना आन्ध्रभाषायाः परिपुष्टिः सौंदर्यं च न लभ्येत । वृक्षमूलस्य परिरक्षणे शाखानां प्रशाखानां स्थितिः स्थिरा रम्या च भवति । एवमेव संस्कृतस्य सम्यक् पोषणेनैव सर्वासामपि भाषाणां पोषणं सिध्यति । राष्ट्रभाषापदाधिरूढायाः हिन्द्या अपि अत्यन्तोज्जीवनकारि संस्कृतमेव भवति खलु । अपि च अद्यतनव्यवहारे विद्यमानानां भाषाणां मध्ये अन्यतमायाः भाषायाः राष्ट्रभाषात्वकरणे अन्यभाषाभाषिणा माग्रहः

जायेत; स्वमातृभाषाया: राष्ट्र-भाषात्वं कुतो न भवेदिति। संस्कृतस्य राष्ट्रभाषात्वकरणे न कोऽपि कुपितो भवेत्। यः कुप्यति स भारतीय एव न भवति। संस्कृतं न कस्याऽपि भाषा, किन्तु सकलस्यापि भारतीयस्य। अतः कालान्तरे संस्कृतमेव यथापूर्वं राजभाषापदवीमधिगच्छेदित्ये - वास्माकं विश्वासः।

स्वातन्त्र्यसम्पादनानन्तर-मस्मत्प्रभुतया संस्कृतस्य प्राधान्यं प्राशस्त्यं, आवश्यकता च परि-ज्ञात मेव। संस्कृतिसमुन्नते रिदं संस्कृतं मूलभूतमिति विदितमेव।

अत एव तस्य संस्कृतस्य अभि-वृद्धयै व्याप्त्यै च नानाविध-प्रयत्ना नाचरति केन्द्रप्रभुत्वं, राष्ट्रप्रभुत्वं च। संस्कृतस्य कृते अधिकं धनं व्ययीक्रियते। आकाशवाण्यामपि वार्ताप्रसारः प्रत्यहं संस्कृते क्रियते। विशेषतः नैकविधाः कार्यक्रमाः आकाश-वाण्यां प्रचाल्यन्ते।

संस्कृतपत्रिका - सम्पादकाः रसज्ञाः पण्डिताः आर्षमताभि-मानिनः नायकाश्च अस्य संस्कृ-तस्य इतोधिकसमुन्नत्यै सकल-विधान् प्रयत्ना नाचरन्त्विति प्रार्थ्यन्ते।



# Samskritha Bhasha Pracharini Sabha,
## CHITTOOR.

**Income and Expenditure Statement for the Year ending 31st March, 1974.**

EXPENDITURE

| | | |
|---|---|---|
| To Opening Stock of Books | | Rs. 32,240-80 |
| ,, Cost of Papers & Printing charges publication | | ,, 3,253-13 |
| ,, Cost of Books purchased | | ,, 865-35 |
| ,, Job printing & Question paper printing | | ,, 1,194-15 |
| ,, Subscriptions for periodicals | | ,, 174-79 |
| ,, Postage, Bank charges & Telegrams etc. | | ,, 104-39 |
| ,, Audit fee - for Library accounts | | ,, 25-00 |
| ,, Telegram address renewal fee paid | | ,, 50-00 |
| ,, Conveyence charges | | ,, 201-30 |
| ,, Stationery & General charges | | ,, 552-17 |
| ,, Building maintanance charges | | ,, 70-30 |
| ,, SILVER JUBILEE CELEBRATIONS : | | |
| ,, Stationery & General charges | Rs. 1,211-18 | |
| ,, Printing charges | ,, 1,044-50 | |
| ,, Drama enacted expenses | ,, 561-90 | |
| ,, Conveyence charges | ,, 263-55 | |
| ,, Typing charges | ,, 190-00 | |
| ,, Foundation stone expenses | ,, 481-30 | |
| ,, Postage & Telegrams | ,, 196-15 | |
| ,, Photo expenses | ,, 250-00 | |
| ,, Honarorium paid to Guests | ,, 834-05 | |
| ,, Pandal expenses | ,, 141-00 | |
| ,, Garlands, flowers, Mike arrg etc. | ,, 436-00 | |
| ,, Preperation of Blocks | ,, 224-58 | |
| ,, Boarding expenses | ,, 716-65 | |
| | | Rs. 6,550-86 |

| | | |
|---|---|---|
| ,, Remuneration to Pracharaks | ,, | 3,600-00 |
| ,, Remuneration to Teachers | ,, | 7,560-00 |
| ,, Remuneration to Clerk, attender & Sweeper | ,, | 1,620-00 |
| ,, Audit fee paid | ,, | 25-00 |
| ,, Postage | ,, | 1,545-30 |
| | ,, | 59,632-54 |

To Gairwani Magazine expenses :

| | | | | |
|---|---|---|---|---|
| ,, Salary paid to Editor | Rs. | 1,800-00 | | |
| ,, ,, ,, Sud-Editor | ,, | 1,440-00 | | |
| ,, ,, ,, Clerk & Peon | ,, | 720-00 | | |
| ,, Cost of Paper | ,, | 2,213-30 | | |
| ,, Printing charges paid | ,, | 2,323-50 | | |
| ,, Block making charges | ,, | 49-50 | | |
| ,, Postage | ,, | 170-43 | | |
| ,, Audit fee paid | ,, | 25-00 | | |
| | | | Rs. | 8,741-73 |
| ,, Remuneration paid to Examiners | | | ,, | 601-40 |
| ,, Remuneration paid to Superintendents | | | ,, | 785-58 |
| ,, Scholarships paid to students | | | ,, | 1,150-00 |
| ,, EXCESS OF INCOME OVER EXPENDITURE | | | ,, | 6,289-14 |
| | | | Total Rs. | 77,200-39 |

INCOME

| | | | |
|---|---|---|---|
| By Sale of Books | | Rs. | 8,104-65 |
| ,, Subscriptions : from members | | ,, | 187-75 |
| ,, ,, from Gairwani | | ,, | 857-40 |
| ,, Collection of Examination fee | | ,, | 5,582-15 |
| ,, Interest receipts | | ,, | 3,010-20 |
| ,, Donations receipts | | ,, | 16,196-85 |
| ,, Donations - for Silver Jubilee | | ,, | 1,060-00 |
| ,, GOVERNMENT GRANTS : | | | |
| ,, For Pracharak, Teachers etc. | 4,050 | | |
| ,, For Gairwani Magazine | 3,000 | | |
| ,, For Library (in 1972—73) | 1,500 | | |
| ,, From District Central Library for 72—73 & 73—74 | 700 | | |
| | | Rs. | 9,250-00 |

| | | |
|---|---|---|
| „ Closing stock of Books | | „ 32,375-55 |
| „ Suspence Account | | „ 575-84 |
| | | Rs. 77,200-39 |

## SAMSKRITHA BASHA PRACHARINI SABHA, CHITTOOR.

### BALANCE SHEET AS ON 31 ST MARCH 1974

LIABILITIES :

| | | |
|---|---|---|
| *Sundry Creditors :* | | |
| K. V. Raghavacharyulu | Rs. 300-00 | |
| K. Srinivasacharya | „ 4-00 | |
| | | Rs. 304-50 |
| *Capital Account :* | | |
| Capital - as per Last B/sheet | Rs. 1,17000-87 | |
| Add : Excess of income over the expenses of the year transfered | „ 6,289-14 | |
| | | „ 1,23,290-01 |
| | | Rs. 1,23,594-51 |

ASSETS

| | | |
|---|---|---|
| Cash on hand | | Rs. 643-84 |
| *Cash at Bank:* (C.C.T B. Ltd.,) | | |
| S. D. No. 3079 | Rs. 4,685-52 | |
| S. D. No. 3386 | „ 110-55 | |
| C. D. No. 2941 | „ 303-79 | |
| C. D. No. 1938 | „ 142-97 | |
| | | Rs. 5,242-83 |
| *Fixed Deposit:* C.C.T.B. | 34,562-00 | |
| Andhra Bank Ltd.. | Rs. 1,000-00 | |
| | | Rs. 35,562-00 |

| | | | | |
|---|---|---|---|---|
| *Building Accountant:* | | | | |
| As per Last B/sheet | Rs | 30,928-23 | | |
| Addts., during the year | „ | 1,478-80 | | |
| | | | Rs. | 32,407-03 |
| Furniture account | | | Rs. | 3,284-98 |
| *Library Books Account.* | | | | |
| As per last B/sheet | Rs. | 12,724-93 | | |
| Additions during the year | „ | 436-50 | | |
| | | | „ | 13,161-43 |
| *Sundry Debtors:* | | | | |
| M. Munisubramanyam Chetty | Rs. | 152-07 | | |
| Sanskrit School, Vyasahram | „ | 6-70 | | |
| A. P. S. E. B. | „ | 20-00 | | |
| N. Anantharama Sastri | „ | 118-35 | | |
| C. V. Seshacharyulu | „ | 340-32 | | |
| P. Subbaraghaviah | „ | 10-60 | | |
| Hindhi Premi Mandali A.gadda | „ | 96-85 | | |
| V. P. Bills due | „ | 46-25 | | |
| | | | Rs. | 791-14 |
| Closing stock of Books | | | Rs. | 32,375-55 |
| Difference in accounts | | | Rs | 125-71 |
| | | | Rs. | 1,23,594-51 |

## *AUDIT REPORT*

We certify that the above statments of the Samskritha Basha Pracharani Sabha, Chittoor have been prepared in accordancee with the books maintained by them and they are found to be correct to the best of our knowledge.

Associated Auditors,
CHITTOOR
4—11—74.

For Associated Auditors,
**(Sd.) Harikrishnan**
*Partner.*

# भिन्नरुचि र्हि लोकः

श्री ना. व. निगमान्तः, प्रोद्दुटूरु.

दैवाधीनमिदं जगत्खलुसदा जीवाऽसुखं शर्म च
प्रारब्धानुगुणं भजन्ति मरणं जातस्य नित्यं क्षितौ ।
स्वर्गो धर्मफलं सुखैकनिलयोऽधर्मस्य दु खात्मकं
प्राहुर्नारकमित्यतोत्तमजना भक्तिर्हि मोक्षप्रदा ॥

देवो नास्ति पुराणजालमखिलं वेदादिकं कल्पितं
सर्वं स्वार्थपराः छलोक्तिनिपुणाः केचित्तु मन्दाऽनिशं ।
चातुर्येण निजेन पामरजनानते वञ्चयन्ति ध्रुवं
भ्रान्तिः केवलमीदृशी च जनधीत्याख्यान्ति नव्या नराः ॥

अन्ये शोषलिजं वदन्ति समतां गर्जन्ति भीमैः स्वरैः
सङ्घे दीनविभूषिते सुनटवत्कृत्वाङ्गचेष्टादिकं ।
दीर्घायोजनया विचिन्त्यकृतया ते भारतं नूतनं
पञ्चाब्दीमितयेति धीरमतयो निर्मेयमाचक्षते ॥

लोके कर्षकनिघ्नमेव निखिलक्षेत्रं हि तल्लाभभा
ग्भूस्वामी नभवत्यतोत्रकृषिरेवैकोत्तमाभारते ।
रष्या स्थैरपि कोविदैर्दृढतरं रीतीयमाश्रीयते
तस्माद्रिक्तवशंवदं जगदिति व्याख्यान्ति केचिद्बुधाः ॥

सामान्यास्तु वयं मदीयभृतका मत्पक्षगाः सन्ततं
सामान्या नहि संशयो मदितरे जल्पन्ति यत्किञ्चन ।
सर्वे दक्षिणभारतीयसुजनाः नीचैः क्रियन्ते बला
त्तस्मा द्राविडराष्ट्रमेव हि वरं प्रोशन्ति भिन्नंपरे ॥

निर्दुष्टा वयमेव लञ्चविमुखाः गेहादिकं स्वार्जितं
वित्तं न्याय्यपथेन जातममितं नैवापरेमद्विधाः ।
प्राहुः केचन नव्यपक्षपतिताऽभिप्रैति कश्चित्परः
स्वं पक्षं विमलं प्रजोपकरणे सक्तं पुरोगन्त्विति ।।

एवं सर्वमतानुगा नरवराः स्वैरं स्वकीयं मतं
साटोपं दृढयन्ति तत्र किमिदं तत्वं च सत्यं हितं ।
ज्ञातुं तत्कृतजल्पनोदितशिरोबाधं विचिन्ताकुलं
क्षिप्रं देव रमापतेकरुणयाऽदक्षं जड पाहि माम् ।।

## शरद् – ऋतुः

कविः काव्यतीर्थ ज. व्यं. पल्लेवारः उपाख्यः जयेशः, M.A. LL.B.
पुसद. (महाराष्ट्र)

क्रीडन्ति हंसाः सरितां प्रवाहे हसंति पद्मानि निपाननीरे ।
सरांसि नृत्यन्ति तरंगजालैः गुञ्जन्ति भृङ्गाः शरदागमेन ।।
फलातिभारेण नमन्ति वृक्षाः उत्फुल्लपुष्पैः लतिका हसन्ति ।
शस्यप्रसन्नाः कृषिभूमिभागाः नन्दन्ति सर्वे शरदागमेन ।।
लुटन्ति पद्माः मुखचंद्रकान्तिम् गतिं हि हंसाः, ललितांगनानाम् ।
भ्रूविभ्रमं भ्रान्तहृदां तरङ्गाः तुष्यन्ति सर्वे शरदागमेन ।।
तारागणालंकरणं दधाना विमुक्तमेघाम्बरशुभ्रवस्त्रा ।
जोत्स्नाप्रभाभासितभामिनीव विभाति रात्रिः शरदागमेन ।।
प्रफुल्लपंकेरुहवक्त्ररम्या नीलोत्पलाभा नयनाभिरामा ।
सस्यांशुकेनावृतश्यामलांगी विभाति धात्री शरदागमेन ।।

११

# प्रणुतिस्वराः



**लेखकः "राधा"**

प्रभो ! देवास्सर्वे मुकुलितकराम्भोजविभवाः
किरीटार्चिश्शश्वद्धवलितयशोधौतचरणाः ।
निरीक्षन्ते तेषां सममिममसूयापरिगत
मये ! राधानाथ ! प्रकटितदयापारमव ! माम् ॥

दरस्मेराङ्कूरप्रतिपदविलिप्तार्चिनिचय !
कृपापारावार ! प्रियजनमनःकञ्जनिलय ।
प्रभो ! मन्येऽहं त्वामधखलकुलोच्छेदनपटु
मये ! राधानाथ ! प्रकटितदयापारमव ! माम् ॥

सिता सा मृद्वीका मम रसनया लोभगतया
तथाप्यासीन्नो मे मनसि कणशोवाऽपि विरतिः ।
त्वदीयं नामैव प्रभवति सदाऽरक्ति जनने
अये ! राधानाथ प्रकटितदयापारमव ! माम् ॥

सदा रागावेशप्रमुदितमहाभ्रान्तिकलितं
विनश्यद्भावानामपि निलयकं शोकगतिकम् ।
त्वदीयैकः पादश्शरण मिति चिन्ता परिगत
मये ! राधानाथ ! प्रकटितदयापारमव ! माम् ॥

मदीयात्मोद्भेदं कथमपि भवोल्लासविधुरं
विमुञ्चद्दुर्वाञ्चं प्रणमित भवत्पादजलजम् ।
सुशं सद्दैवेच्छाफलमपि च कृत्वा विकलुष
मये ! राधानाथ ! प्रकटितदयापारमव ! माम् ॥

लसच्छयामाभ्राभं जनयति मुदं मे नयनयो
स्त्वदीयं तद्रूपं यदखिलजनश्लाघचतुरम् ।
प्रभो दत्त्वाभक्ति तव परिचयादाविलपर
मये ! राधानाथ ! प्रकटितदयापारमव ! माम् ।।

प्रभो ! क्षन्तव्योऽहं रचितबहुदोषोऽनुचितवान्
बहिष्कर्तुं शक्तस्तदपि न च लज्जापरिगतः ।
त्वमेव ज्ञात्वा तान् शमय हृदि शान्ति कुरुविभो
अये ! राधानाथ ! प्रकटितदयापारमव ! माम् ।।



## "धर्मसिन्धु" पत्रिकायाः आविष्करणं

'धर्मसिन्धु' नाम एषा आंध्र मासिकी पत्रिका । अधर्मप्रतिघटनं तथा धर्मप्रबोधं कर्तुमेव हि स्थापिता । अस्याः पत्रिकायाः सम्पादकः श्रीमान् दर्भा चलमय्यशास्त्री, प्रकाशकः डाक्टर् श्री बच्चु सूर्यनारायणमूर्ति, एं. बि. बि. एस्.

एतत्पत्रिकायाः आविष्करणार्थं २९-९-७४ सायं तृतीयघंटासमये, पेद्दापुरस्थे श्री कन्यकापरमेश्वरीदेवालये प्रचलिता ।



# सुगात्र्याः पातिव्रत्यम्

श्री मेडिशेट्टि शिवगणेश् बाबु, पेद्दापुरम्.

पुरा काश्मीरेषु देवपूजकः कोऽपि विप्र आसीत्। तस्य बभूव 'सुगात्री' नामधेया काचन तनया। शालीनः तस्याः पतिः। आविवाहात् श्वशुरगृहे एव न्यवसत् शालीनः। अथैकदा सर्वाभरणैरलंकृत्य सुगात्रीं नवयौवनां, तन्माता यावत् भर्तृसन्निधिमनयत् तां तत्प्रथमसङ्गमवेळायां आभरणादिक मालोक्य तस्याः, पराङ्मुख आसीत् जुगुप्सया शालीनः। अविदितपतिहृदया प्रभूताशाप्रतीक्षया सुगात्री प्रथमरजनीं तां, नीत्वा मुधैव ततो न्यवर्तत प्रातः। एवं शालीनताटस्थ्येन सुगात्री मुधैव शयनमन्दिरात् गमनागमनप्रयासमन्वभूत्। एतत् ज्ञात्वा माता तु सुतरां खिन्ना आसीत्।

कतिपयदिवसापगमे सखीजनप्रबोधानुसारेण एकस्यां रात्रौ पतिनिकटं गत्वा, सुगात्री ताम्बूलादिकसमर्पणेन स्वयमेव परिचय माचचार। परं तु तूष्णीं बभूव शालीनः यथापूर्वमिव। तथापि सा मङ्गलसूत्रवहन मेव सन्तोषः इति मत्वा, भर्तुरायुष्यहेतुरितिधिया विविधैरलङ्कारैरात्मानमनुदिनं विभूषयन्ती, जामातृनिन्दानिरतां मातरं मुहुर्मुहुः निवारयन्ती सा यथाकथञ्चित् कालं क्षपितवती। गतेषु कतिपयदिवसेषु सञ्जातरोषा तन्माता जामातरं प्रमदवनपरिवर्धनकार्ये न्ययुङ्क्त। शालीनस्तु सकलदेवतासंसेवितायाः शारदायाः पूजार्थोद्यमुद्योगः समुचितः एवेति मन्वानः परमानन्देन, श्रद्धया महत्या च तदुद्यानभूमिसंवर्धनपरायणः अभवत्। फलितः वने तस्मिन् विविधास्तरवः लताश्च पत्रपुष्पफलभरिता नव-

नवोन्मेषसुभगं ववृधिरे। सः भूसुरोत्तमः प्रतिदिनं निशान्तसमय एव उत्थाय, परिसमाप्य च जपादिकं, देवीसमाराधनतत्परोऽभूच्च। सुगात्री पतिव्रतामतल्लिका वनव्यापार परिश्रान्तं भर्तारमसहमाना तस्य साहाय्यमाचरितुकामाऽपि तरुणीजनसहजया लज्जया न शशाक कर्तुं।

एकदा वृष्ट्यां जगदुपद्रवकारिणी भूतायां निजगृहस्था सुगात्री चिन्ताकुलितहृदया सती इह जन्मनि, जन्मान्तरे वा व्रतध्यानादिप्रभवं यन्मे सुकृतमस्ति, तन्महिम्ना शालीनो न भवेत् वृष्टिबाधाभाजन मिति कुलदेवतां शारदां प्रार्थयामास। अनुपदमेव सा गूढेन मार्गेण उद्यानभूमिं गत्वा, वृष्टिबाधारहितं आत्मदयितं दूरत एव वीक्ष्य परमानन्दा भूत्वा च न्यवर्तत। गतेषु कतिपयदिवसेषु सा व्रीडां विहाय, उल्लङ्घ्य च मातुश्शासनं पत्युः साहाय्यं विरचितुं दृढं निश्चित्य मनसि, अयासीच्च गृहारामं। तत्र सर्वाभरणानुन्मुच्य परिधायवल्कलमल्पं, समाचचार च वनपालककृत्यं सर्वं। शालीनस्तु समधिकपरिश्रान्तायाः सुगात्र्याः अखिलावयवसौष्ठवं, पुलकिततनुसौन्दर्यं च समवलोक्य सद्यः कन्दर्पसायकनिहतोऽभूत्। झटिति सः तया सह विस्रब्धं कामसाम्राज्यसुखमन्वभूत्। अथ यथा कथञ्चित् तस्मात् सा गृहमगमत्। विदितवृत्तान्ता माता परं जहर्ष।

तस्यां रात्रौ पूर्वाभ्यधिकमात्मानमलंकृत्य सर्वाभरणैः शालीनस्य सन्निधिमगात् सुगात्री पूर्वाभ्यधिकरति सुखमनुभोक्तुं। हा! किं वक्तव्यं? यथापूर्वं शालीनः आसीदुदासीन एव। सुगात्री तु अनवधिकां मनोव्यथामवाप। अथैकस्यां रात्रौ पूर्ववदेव सा पतिमुपसृत्य तेन निराकृष्टाऽपि धैर्येण अब्रवीत् – "नाथ! पादसंवाहननियोगेनापि न मां सम्भावयसि। नानुमन्यसे शय्यातल्पोपवेशनमपि। नानुगृह्णासि दरा न प्रदानमपि।" इत्युक्त्वा क्रमो-

पचीयमानकुसुमशराग्निसन्दह्य - मानसुकुमारहृदया विचार्यमाणे पाषाणादिकमेव वरं भवःपेक्षया' इति परुषं भणन्ती तस्य पादावुपजग्राह सहसा । किं च उपविश्य शय्यायां, निक्षिप्य तत्पादयुगलं आत्मनः ऊरुयुगले कुचमण्डले च, उपस्पृश्य नेत्राभ्यां, विन्यस्य कपोलयोः, आविश्चकार च चिरप्ररूढमात्मनः प्रेमभावनां । कालेन महता एवं संवाहितपादोऽपि शालीनः यथापूर्वं तूष्णीं बभूव । दुरवस्थामिमामवलोक्य सुगात्री व्यजिज्ञपत्तं तदनु "नाथः कोऽयं तूष्णींभावः ? यदि परतरुणीचित्तासक्तस्तर्हि भवान् निदेशय माम् । तरलाक्षीं तामहमेव त्वत्समीपमानयामि यदि सामद्वशगा भवेत् । तस्या अपि भवत इव परिचर्यामातनोमि । केनाप्युपायेन भवितव्यम् विगतचिन्तैः भवद्भिः । अथ आपणे मां विक्रेतुमिच्छसि सर्वदा सज्जा भवामि' इति । इत्थमपयाचमानायाः सुगात्र्याः एकमपि वचनं न चकार शालीनः कर्णे ।

अथ दिवसे परस्मिन् सुगात्री पुनरपि गृहारामं गत्वा, भूषणमुक्ता सती पत्युस्साहाय्यं विरचय्य तस्य सम्भावनामाप । विजज्ञे सा तदा, यदयं शालीनः सहजसौन्दर्यकाङ्क्षी, न तु कृतकसौन्दर्यकामी । सा प्रतिदिनमनेन क्रमेण गत्वा वनभूमिं, आचरन्ती पत्युस्साहाय्यं, तमानन्दयामास च इष्टतमैः विविधैः कामक्रीडाविलसितैः । विदितवृत्तान्ता परं ननन्द माता । एकदा तु माता दुहितरमाहूय "वत्से ! गणनीयासि प्रथमतः पतिव्रतासु । भर्तृदूषणं नोत्सहसे श्रोतुमपि । न चिन्तयसि मनसा परपुरुषमज्ञानतोऽपि । न विस्मरसि कदापि पतिभक्ति" इत्यादि नीतिप्रबोधकविषयान् समाभाष्य अततः एवमवदत्– 'अकालसुरतक्रियासु नोदेति सुतः गुणान्वितः इति वदन्ति विचक्षणाः । दैवदुर्विपाकेन संकल्पितः वनव्यापारः तव भर्तुः । इतःपरं नहि गन्तव्यम् तेन तत्र । भवत्या अविदिताः

विधिनिषेधाः क्व वा वर्तन्ते ?" इति ।

एवं भणन्तीं जननीमालोक्य सुगात्री "अम्ब ! पत्युः यदभिमतम् तत्प्रशस्तम् । तदप्रशस्तम् भवति यदनभिमतं साध्वीजनस्य इति वदन्ति कोविदाः । अयमेव मार्गः इष्टतमः ममापि । दैवो वेदो गुरुः सर्वोऽपि न भर्तुरतिरिच्यते स्त्रीणां । पत्युराज्ञामनवरतं शिरसि निधाय श्रद्धया निर्वहन्तीं मां विधिनिषेधाः न बाधन्ते । न मुञ्चामि निषिद्धमिति । न स्वीकरोमि विहितमिति । तत्त्यजामि यत्पत्युरनभिमतं । शिरसा गृह्णामि अभिमतं तु सर्वं सर्वदा । एवं भणन्त्या मेव तस्यां प्रहृष्टा शारदा जगदम्बा तत्राविर्भूय वात्सल्येन सम्भाव्य परं तां तन्मातरमभिवीक्ष्य' शङ्का न युज्यते सुगात्र्यास्साध्वीवर्तनस्य इयं पुत्री तव, पतिभक्तिविशेषेण न केवलमात्मनः अपि तु उभयवंश्यानां पापजातं समुन्मूलयति समूलं । किंचास्याः कथा भवति मत्प्रीतिकारिणी । कथां तामहमेव प्रकाशयामी"त्यब्रवीत् । ततः तौ दम्पती सुगात्रीशालीनौ सानन्दं परस्परं अन्योन्यं च चिरकालमुवासतुः ।

इत्थं सुगात्री साध्वीमतल्लिका मातुश्शासनमपि विलंघ्य, भर्तुरभिमतमेव स्वाभिमतम् मत्वा सर्वदा सर्वधा भर्तृवशवर्त्तिनी भूत्वा च भाविस्त्रीणां आदर्शप्राया अभवत् । किं च सर्वाभरणोन्मोचनायापि सज्जा भूत्वा, पाश्चात्यनागरिकतापिशाचग्रस्तस्वान्ताभिः आधुनिक वनिताभिः अनुसर्त्तव्या, अनुकर्तव्या च अभवत् सर्वास्ववस्थासु । अतः सुगात्रीमनुसृत्यैव प्रतिवनिता तिष्ठति चेत् तस्याः दाम्पत्यजीवनं कल्लोलकलहान्दोलनरहितं सत्, सततं आनन्दजलधिमग्नं भूत्वा च विराजेत । नात्र लेशमात्रोऽपि संशयकार्यः ।



# नारदविजयम्

रचयिता–
श्री कूरं तिरुवाळि नरसिंहः,
व्याकरण, साहित्य शिरोमणिः,
शिक्षाशास्त्री, पि. ओ. एल्.

[पूर्वानुबन्धः]

विष्णुः -- भवतु, मां किमर्थं सुरप्रधानीति एकोऽधिकसहस्रनाम्ना संबोधयसि ?

नारदः -- (वामहस्तेन एकवारं मस्तकं स्पृशन्) मदुक्तौ नास्ति दोषः इत्येव मम विश्वासः ।

विष्णुः -- दोषादोषविचारो नास्त्यत्र । किन्तु किमर्थं एवं नूतन-नाम्ना आहूतमित्येव मम प्रश्नः ।

नारदः -- भगवन् ! पृथिव्यां इदं नाम विद्यते । तत्र नरेषु श्रेष्टः वा श्रेष्टा नरप्रधानी भवति । एवं सुरेषु प्रधानभूताः भवन्तः सुरप्रधानीति नाम्ना विलसन्ति । (इत्युक्त्वा कृत्रिम-रूपेण मन्दं हसति)

विष्णुः- विषयेऽस्मिन् अवशिष्टं किमपि विवक्षुरसीति प्रबोधयसि नु ।

नारदः -- नैव (मुहूर्तं तूष्णीं स्थित्वा) प्रधानिपदवीकृते काल-निर्णयो वर्तत एव ।

विष्णुः -- (शङ्कितस्सन्) इत्युक्ते ?

नारदः -- पञ्चवर्षेभ्यः परं भूयोऽपि प्रजासम्मतिरपेक्ष्यते तत्स्थानं निर्वोढुम् ।

विष्णुः -- तर्हि ममापि पञ्चवर्षपरिमितिरेव वा ?

नारदः -- (सभयं) नैव नैव। अत्र सुरतन्त्रं खलु ।

विष्णुः -- सन्तुष्टोऽस्मि एतावता ।

नारदः -- मामेव पृच्छन्ति भवन्तः सदा ।

विष्णुः -- किमधुना कार्यं मया ?

नारदः -- जगत्प्रभूणां क्लेशकारणं किमिति जिज्ञासुरस्मि ।

विष्णुः -- (ईषद् आलोच्य) भवतु ? मम विषादकारणं किमित्युक्ते । भूलोके धर्मो विनष्टः । अधर्मः विजृम्भते । 'सत्यं त्यज' इति वदन्ति जनाः इति श्रुतं मया ।

नारदः -- एवं वा ? (आश्चर्यं प्रकाशयति)

विष्णुः -- तत्र धर्मः स्थापनीयः । 'आर्ताः विषण्णाश्च परिरक्षणीयाः । खलाः शठाश्च संहरणीयाः । यतः पूर्वमेव मया 'योगक्षेमं वहाम्यहम्' इति प्रतिज्ञातं खलु ।

नारदः -- (अट्टहासं करोति)

विष्णुः -- किमर्थं हससि त्वम् ?

नारदः -- न किमपि । 'योगक्षेम वहाम्यहम्' इति वाक्य भवदीयमेव वा ?

विष्णुः -- (ईषद्क्रुद्धस्सन्) नोचेत् कस्येदम् ?

नारदः -- जीवितक्षेमसंस्थाकारैः (Life Insurance) वाक्यमिदं आदर्श (Moto) वाक्यत्वेन सर्वत्र प्रकाशितमस्ति । अतः जनाः तेषां सूक्तिरियमित्येव मन्वते ।

विष्णुः -- पश्य ! एतेनैव ज्ञायते खलु। अधर्माधिक्यं कियत् जातम् ।

नारदः -- सत्य प्रभो !

विष्णुः -- येन केनापि रूपेण भूयोऽपि तत्र धर्मः स्थापनीयः ।

नारद -- किञ्च झटित्युपायो अन्वेषणीय एव ।

विष्णुः -- (इतस्ततः व्रजति, नारदं पश्यति, पुनर्भ्रमति) नारद त्वयैव कर्तव्यमेतत् यत् धर्मस्थापनं मर्त्यलोके ।

नारदः -- (व्याकुलस्सन्) कथं भगवन् ?

विष्णुः -- त्वं भूलोकं गच्छ । तत्र कृत्रिमाख्यां स्वीकुरु । जनतन्त्र व्यवस्थाद्वारा मन्त्रिपदवीं लब्ध्वा एव लोकक्षेमं कुरु ।

नारदः -- तथैव, जगत्पतये नमः ।

विष्णुः -- कार्यसिद्धिरस्तु ? (प्रणम्य नारदः नरलोकं गच्छति ।

(यवनिका पतनम्)

समाप्तः द्वितीयोऽङ्कः

(अनुवर्तते)



# श्री वेंकटेशस्तोत्रमाला

'स्फूर्तिश्रीः'

## द्वितीयस्तबकः

भवन्तं महान्तं प्रमातुं समर्थो
जगत्या मगत्यां न कश्चिद् विपश्चिद् ।
तथाप्येवमास्ते महान् वाक्प्रचारः
प्रसीद प्रसीद प्रभो वेंकटेश ।।

जगद्वस्तु पक्षे भवेद् वाग् दधाना
सुवर्णानि पर्ण प्रसूनानि नित्यं ।
अवाग्गोचरे स्यान्मनो नः फलाय
प्रसीद प्रसीद प्रभो वेंकटेश ।।

तमोमग्नदेशे लुठद् यात्रिकानां
गभीरेऽब्धिनीरे निमज्जज्जनानां ।
त्वमेव प्रदीप स्त्वमेवान्तरीपः
प्रसीद प्रसीद प्रभो वेंकटेश ।।

भयाद् रक्षणायां मन शिक्षणायां
निरालम्बकानां समुद्धारणायां ।
तवालम्बहस्तो जगत् सुप्रशस्तः
प्रसीद प्रसीद प्रभो वेंकटेश ।।

भवानेव कर्ता भवानेव भर्ता
भवानेव हर्ता जगन्मण्डलस्य ।
भवानेव लोक स्त्रिलोकातिशायी
प्रसीद प्रसीद प्रभो वेंकटेश ।।

विधित्वं प्रभुत्वं हरत्वं समेत्य
भवन्तं श्रयन्ते प्रसन्नत्वबुद्धया ।
भवानेव नूनं सचेतश्शरण्यः
प्रसीद प्रसीद प्रभो वेंकटेश ॥

सहस्रं सुराणां भवेदिष्टदानां
परं मानसे मे न तस्मै रिरंसा ।
कलौ वेंकटेशः समस्तार्थकल्पः
प्रसीद प्रसीद प्रभो वेंकटेश ॥

स्रवन्ती कलाभ्यां भवल्लोचनाभ्यां
नयन्ती वरिष्ठ प्रसाद प्रमोदान् ।
इहास्ते विचित्रा नदी नाम काचित्
प्रसीद प्रसीद प्रभो वेंकटेश ॥

त्वदीयांघ्रिदेशः सुधासन्निवेशः
शुचिस्मेरमास्यं प्रजानन्दसस्यं ।
विभूति स्त्वदीया प्रपुण्य प्रसूतिः
प्रसीद प्रसीद प्रभो वेंकटेश ॥

चिदानन्दवल्ली शिरोभूषणं त्वम्
सदा दीप्यदर्थ श्चरद्रत्नदीपः ।
जगद्रम्यपद्म प्रतिष्ठा प्रकाण्डः
प्रसीद प्रसीद प्रभो वेंकटेश ॥

–(अनुवर्तते)

---



# Samskritha Bhasha Pracharini Sabha,

## CHITTOOR A. P.



RESULTS OF SEPTEMBER EXAMINATIONS, 1974.

The following are the Register Numbers of successful Candidates who appeared for the Samskrit Examination held on 7th, 8th and 9th September, 1974.

### PARICHAYA

I Class:- 112 157 158 214 216 385 387
396 398 400 403 405 408 410 412 414 431
432 554 556 587 608 614 625 631 to 633 665
668 673 674 676 824 827 829 839 840 849
869 870 874 876 877 888 923 948 951 and
1081.

II Class:- 1 6 10 to 12 54 55 107
111 113 to 120 124 125 127 128 153 181
194 221 259 260 264 266 295 302 386
392 394 401 409 413 415 433 439 441
442 to 451 457 458 460 to 463 475 484 496
497 499 501 502 506 511 515 537 555
558 559 561 563 588 626 627 629 635
636 to 638 661 671 736 737 739 741 743
756 757 770 776 780 805 806 809 825
826 828 830 833 837 838 848 863 864

866 868 871 873 875 879 889 921 922 940 to 946 949 950 989 991 994 1016 1039 1050 to 1052 1054 1056 1061 1083 1084 and 1087.

III Class:- 2 13 to 16 18 19 31 32 48 50 53 56 57 62 65 71 to 73 75 103 104 106 109 121 to 123 126 129 130 to 134 136 144 to 151 154 155 164 166 167 170 171 176 182 188 189 193 200 212 213 218 222 223 227 228 232 233 253 254 261 to 263 265 267 268 273 275 279 281 283 285 to 287 290 292 294 297 298 to 300 303 to 305 359 to 361 366 367 388 390 395 399 402 407 411 440 452 459 470 to 474 477 to 483 485 to 487 489 498 500 504 505 507 508 510 514 551 552 557 560 562 564 565 572 to 576 582 584 585 589 592 to 595 597 606 607 624 646 651 654 660 664 666 672 740 742 762 769 773 775 781 804 807 808 811 814 817 818 819 831 834 841 847 865 872 880 881 884 885 890 924 952 953 963 to 967 969 978 to 981 984 to 986 988 990 1017 1019 1020 1038 1040 to 1043 1046 1048 1049 1055 1058 1060 1062 1063 1068 1069 1074 1082 1086 1088 1090 1092 1097 and 1098.

## ABHIJNA

I Class:- 5 52 78 99 153 246 786 859 and 862.

II Class:- 3 4 35 47 51 58 60
77 79 to 83 85 to 88 93 96 98 100
101 159 160 163 203 235 244 245 307
308 309 320 321 326 329 338 341 342
350 434 493 to 495 520 525 528 566 568
570 643 644 681 682 684 685 689 691
693 695 696 702 704 to 706 708 711 783
787 856 to 858 860 861 895 898 899 909
914 919 926 928 929 995 996 1009 1027
1028 1031 and 1032.

III Class:- 21 34 59 76 89 to 92 94
161 162 169 204 206 to 208 236 to 243 310
316 319 322 to 325 327 328 330 to 333 335
336 337 339 340 343 to 348 350 to 352 354
355 382 to 384 453 to 455 491 516 to 519 521
522 to 524 526 529 531 538 577 to 580 600
615 641 680 683 687 690 697 698 700
703 707 709 710 744 745 747 751 759
761 778 782 785 851 893 894 900 901
906 910 927 930 931 955 956 971 974
997 999 1003 and 1064.

VICHAKSHANA

I Class:- 717 only

II Class:- 8 25 26 27 210 251 465
467 468 469 533 716 718 723 724 832
932 and 933.

III Class:- 7 28 29 33 211 247 248
249 250 466 542 543 544 545 616 618

712 714 715 720 721 722 789 790 791
792 793 and 1011.

SAMARTHA (FULL)

I Class:- Nill
II Class:- 534 and 571.
III Class:- 39 40 42 416 456 535 536
546 547 603 612 728 and 1013.

Part I Only: 726 934 and 935.
Part II Only: 418 419 420 727 729 754 794
795 797 798 800 and 1012.

KOVIDA (FULL)

I Cllass: Nil.
II Class: 604 Only.
III Class: 605 Only.

First Part: 421 422 423 424 425 426 427
428 429 622 623 and 1014.
Second Part: 426 427 428 429 619 620 621
624 733 735 802.
Third Part: 429 622 623 801 and 802.
Fourth Part: 356 731 and 1014.
Fifth Part: 9 732 and 972.

The following candidates stood first in First Class in the Examinations as shown below:

Parichaya: No. 431 Patnam Krishnamurthy, Tirupati.
Abhijna: No. 786 Y. Narasimhacharya, Manthralaya.
Vichakshana: No. 717 J. Santa Saraswathy, Madras.
Samartha: Nill.
Kovida: Nill.

CHITTOOR,
d./20–10–74.

(K. Srinivasachari)
*Parikshamanty.*

# परीक्षाफलसारिणी

## आनन्द - दक्षिणायनपरीक्षासु उत्तीर्णाः – ७३८

### SEPTEMBER EXAMINATIONS 1974.

| परीक्षाः | अभ्यर्थिनः | उत्तीर्णाः | | | |
|---|---|---|---|---|---|
| | | प्र. श्रे. | द्वि. श्रे. | तृ. श्रे. | खंडशः |
| परिचयः | 645 | 49 | 136 | 231 | – |
| अभिज्ञः | 306 | 9 | 90 | 117 | – |
| विचक्षणः | 68 | 1 | 18 | 28 | – |
| समर्थः | 45 | – | 2 | 13 | 15 |
| कोविदः | 32 | – | 1 | 1 | 27 |
| आहत्य | 1096 | 59 | 247 | 390 | 42 |



# आनन्द – दक्षिणायनपरीक्षासु उपयुक्तानि केन्द्राणि – ६२

(१) अम्बत्तूरु (२) अनन्तपुरम् (३) अनकापल्ली (४) आल्लगड्ड (५) इन्द्रप्रस्थम् (६) एलूरु (७) कडप (८) कर्नूलु (९) काकिनाडा (१०) काचिगूडा (११) कुम्भकोणम् (१२) कोत्तपालेम् (१३) कोत्तपेट (१४) कोयम्बत्तूरु–ए (१५) कोयम्बत्तूरु – बी (१६) क्रोम्पेट (१७) गुण्टूरु (१८) चित्तूरु (१९) तञ्जावूरु (२०) तिरुपति (२१) तेर्लाम् (२२) दोम्मरनन्द्याल (२३) नेकरिकल्लु (२४) नेल्लूरु (२५) पाकाल (२६) पाटूरु (२७) पालकोण्ड (२८) पार्वतीपुरम् (२९) पिठापुरम् (३०) पेद्दापुरम् (३१) पोडूरु (३२) प्रोद्दुटूरु (३३) बेंगलूरु (३४) बोब्बिलि (३५) भीमवरम् (३६) मदनपल्ली (३७) मधुरा – ए (३८) मधुरा – बी (३९) मदरास् (४०) मन्नार्गुडि (४१) मर्लगाडु (४२) माधवरम् (४३) मिन्नात्तूरु (४४) मोडेकुर्रु (४५) मन्त्रालयः (४६) राजमन्ड्रि (४७) यं. आर्. नगरम् (४८) राजानगरम् (४९) रायचूरु (५०) लेपाक्षी (५१) वडुवूरु (५२) विजयवाड (५३) विजयनगरम् (५४) विल्लुपुरम् (५५) विशाखपट्टणम् (५६) शाहपूर् (५७) श्रीरङ्गम् (५८) श्रीकाकुलम् (५९) सेलम् (६०) गूडूरु (६१) मचिलीपट्टणम् (६२) पार्वतीपुरम् (Town) ।

# OFFICE OF THE COMMISSIONER,
# ENDOWMENTS DEPARTMENT,
# HYDERABAD.

L/Dis .No. 24100 J/ 74, Dt. 24—7—74

*Sub:- Endowments Department - Purchase of Books written by Samskritha Bhasha Pracharini Sabha, Chittoor-Commended.*

All the Executive authorities of 6 (a) institutions are requested to purchase the following Journal for keeping them in the libraries maintained by them.

| S. No. | Name of the Journal | Language | Price |
|---|---|---|---|
| 1. | GAIRVANI | SANSKRIT | 5—00 |

All the Dy. Commissioners and Asst. Commissioners are requested to issue similar instructions to the Executive authorities of the institutions under their respective Jurisdictions immediately.

The Journal can be had from Sri N. Ramanatha Aiyar, B. A., B. L., Advocate, Samskritha Bhasha Pracharini Sabha, Chittoor.

**P. Ananda Rao Mudaliar,**

*Personal Assistant (S) to Commissioner.*





# गान्धीकथा

विद्वान् श्री बालगणपतिभट्टः, श्रीरङ्गपत्तनम्.

तुलसीदासकृतरामचरितमानसस्य महान् भक्त आसीत् महात्मागान्धी महोदयः। जातु तस्य नाम्नि पत्रमेकमागतम् "मानसे स्त्रीजातिनिन्दा, निरपराधिनो वालि वानरस्य वधः, विभीषणदेशद्रोहभातृद्वेषौ, इत्यादयो बहवस्सन्ति अवगुणोल्लेखाः। तथापि तत् सर्वोत्तमकाव्यमिति नित्यं कथं वा भवान् भजते?" इत्यासीत्कथनाक्षेपः पत्रे।

अस्योत्तरमेवं ददौ महात्मागांधी "त्वादृशाः संस्कर्तारः समीक्षका वा यद्यधिकं लभन्ते तर्हि पवित्रं रामायणकाव्यं दोषभाण्डागारो भवेदवश्यम्। अस्मिन् विषये मम स्मृतिपथमारोहति काचन पूर्वश्रुतकथा। जातु कश्चन महान् चित्रलेखकः एकं सर्वाङ्गसुन्दरं चित्रं विलिख्य महाप्रदर्शन्याम् न्यक्षिपत्। तस्याधः एकां सूचनां ददौ। "चित्रे मदीयेऽस्मिन् यः कोपि दोषः येन केनापि दर्शकेन दृश्यते चेत् तस्य निर्देशः तत्रैव बिन्दुप्रदानेन दातव्य" इति। अन्तत आलेख्यस्य सर्वाण्यप्यंगानि प्रत्यंगानि दर्शककृतचिन्हैर्लक्षितानि।

वस्तुतस्तु कलात्मकदृष्टचा चित्रं सर्वांगरमणीयमासीत्। भोः टीकाकार! त्वया इयमेवावस्था आदिकाव्यस्यानूदितस्य कृता। त्वादृशाः बहवस्सन्ति समालोचकाः वेद - कुराण - बायबलादि धर्मग्रंथान् प्रति। किंतु गुणदर्शिनः केवलं गुणनेव पश्यंति न पित्तकोपपीडिता इव सर्वमपि दुर्वर्णरञ्जितम्। भवतु, नाहं वच्मि ग्रंथेऽस्मिन्दोषो नैवेति। किन्तु पारायणेनास्य सहस्रसंख्यानां स्वान्तशान्तिर्लब्धा वर्तते। मानसस्य प्रत्येकपृष्ठं भक्तिपूर्णम्। अयं तु अनुभवजन्यज्ञानभण्डारः।" इति।

"यस्य नास्ति स्वयं प्रज्ञा-
शास्त्रं तस्य करोति किम्, लोचनाभ्यां विहीनस्य दर्पणः किं करिष्यति?"

# अभिनववासवदत्ता

**कर्ता – की. शे. वट्टिपल्लि नरकण्ठीरवशास्त्री.**

## ग्रन्थकर्तुः परिचयः

अयं महाकविः, पण्डितवरेण्यः, चित्तूरुमण्डलान्तर्गतकार्वेटिनगरसंस्थानस्याऽलङ्कारभूत आसीत् । अस्य पिता साम्बशिवशास्त्री, माता च वेङ्कटलक्ष्मीः । मुलकनाडु ब्राह्मणशाखीयः । काश्यपगोत्रः । तर्कालङ्कारवागीशबिरुदाङ्कितः । तिरुपति श्रीमहन्तु संस्कृतविद्याकल्पवल्लीपाठशालायां, तर्कालङ्कारोपाध्यायपदवीमध्यतिष्ठत् । अस्य इतरे ग्रन्थाः अमुद्रिताः केचन विद्यन्ते इति जनश्रुतिः । अस्य कालः अतीतशताब्द्याः चरमभागे अद्यतनशताब्देः प्रथमभागे चासीदिति तर्क्यते । कविकुलचूडामणिना सुबन्धुकविना कृतस्य वासवदत्ताख्यगद्यग्रन्थस्य कथां स्वीकृत्य षण्णवत्युत्तरद्विशतार्याश्लोकैः यथामूलं ललितपदैः शब्दार्थालङ्कारालङ्कृतैः सुमनोमनोहरं व्यरचयत् । सोऽयं ग्रन्थः गैर्वाण्यां प्रतिमासं यथावकाशं प्रकटयितुं अस्मत्सभायाः कार्यदर्शिना श्री यन्. रामनाथार्येण वितीर्णः । यथेष्टमास्वादयन्तु सारस्वतीं सुधां रसज्ञाः ।

## ग्रन्थप्रारम्भः

### महेशवन्दनम्

वन्दामहे महेशं वन्दारुजनाभिलषितमन्दारम् ।
बृन्दारकमणिमकुटीसन्दानितसूनसुरभिताङ्घ्रियुगम् ॥ १ ॥

### पार्वतीस्तुतिः

मदनपरिपन्थिमहिषी मघवप्रमुखै स्सुपर्वभि र्महिता ।
मनसि मम सन्निधत्तां मन्दस्मितमुग्धमधुरमुखकमला ॥ २ ॥

### विघ्नेश्वरस्तुतिः

निष्प्रत्यूह मुपासे निर्व्याजं निखिलदेवतोपास्यम् ।
भञ्जक मबोधतमसां कुञ्जरवदन महः किमपि ॥ ३ ॥

### सरस्वतीस्तुतिः

कलये कामपि देवीं कमलासनवल्लभां जगज्जननीम् ।
करकमलकलितवीणां कस्यैचि त्कवनकौशल्यै ॥ ॥ ४ ॥

### वाल्मीकि प्रार्थना

वदने वाचां देवी यस्य चतुर्मुखमुखेष्विव क्रीडाम् ।
तनुते नमोऽञ्जलि रयं तस्मै वल्मीकजन्मने मुनये ॥ ५ ॥

### पूर्वकविस्तुतिः

श्रीव्यासकाळिदासौ भासश्रीहर्षभारविमयूरान् ।
बिल्हणमल्हणबाणप्रमुखान् प्राचः कवी नहं स्तौमि ॥ ६ ॥

### गुरुप्रणिपातः

श्रीशेषगुरो श्चरणौ प्रणिपत्याऽऽलूरुवंशरत्नस्य ।
कृपया साहित्यनिधे षोडशवर्षे करोमि कृति मेताम् ॥ ७ ॥

### कार्वेटिनगरवर्णनम्

अस्ति प्रशस्तयशसां नृपतीनां माकवंशरत्नानाम् ।
कार्वेटिपूर्वनगरी गरीयसी हसितदेवराण्णगरी ॥ ॥ ८ ॥
त्रिभुवनसर्गस्थितिलयलीलालोल स्स वेणुगोपालः ।
यस्यां वसति सलीलं रुक्मिण्या सत्यया च सम्मिळितः ॥ ९ ॥
यस्मिन् श्रुतयो विरताः परमावधि मश्नुते परत्वमपि ।
स किल सदाशिवदेवो दीव्यति सविधे च नैरृते यस्याः ॥ १० ॥

### कार्वेटिनगरराजवर्णनम्

श्रीमान् कुमारवेङ्कटपेरुमाळ्राजेन्द्रचन्द्रमा स्तस्याम् ।
विदुषां हृदयचकोरान् धिन्वन् जयति स्म कीर्तिचन्द्रिकया ॥ ११ ॥
यो जननाथोऽगमयत् योजन मेक तुरङ्गमोत्तंसम् ।
हूणनृपैः कृतशपथः पूर्णजवा द्रूमयानतोऽप्यग्रे ॥ ॥ १२ ॥
यस्मिन् शासति पृथिवीं संख्यावन्तोऽभवन्नऽसंख्याकाः ।
चित्रं वनीपका अप्यऽभवन्नऽवनीपका द्विजा स्सकलाः ॥ ॥ १३ ॥
तस्य बभूवु स्तनया स्त्रय इव वेदा स्त्रयो महामहसः ।
हरिहरहिरण्यगर्भाः कृतावतारा इव क्षितौ कुतुकात् ॥ ॥ १४ ॥
अय मखिलराजहंसप्रकरविमानीकृतिक्षमो भविता ।
इति मत्वेव प्राज्ञः चक्रे ब्रह्माभिध सुत प्रथमम् ॥ ॥ १५ ॥

भवति कवे रानन्दप्रद स्तथा दक्षिणोऽय मवनितले ।
इति स द्वैतीयीकं चक्रे कावेरिराजनामानम् ॥ ॥ १६ ॥
सकलारातिमहीपतिसमदमदावळमृगेन्द्र एष इति ।
अतनो त्तार्तीयीकं तनयं नृपति स्स सिङ्गराजाख्यम् ॥ ॥ १७ ॥
अथ स ब्रह्ममहीपति रभिषिक्तः पालयन् महीमखिलाम् ।
राजति तेजश्शाली मणिरिव शाणोपलोल्लिखित ॥ ॥ १८ ॥
करतलधृतशतकोटिप्रशमितभूभृत्प्रकाण्डपक्षबलः ।
भुङ्क्ते राजबिडोजा राज्यस्वाराज्य मखिल मपि ॥ ॥ १९ ॥
विधुरिव सकलकळानिधि रुदधि रिवोद्वेलवाहिनीशानः ।
मधुरिव कृतसुवनश्श्री र्जयति श्रीब्रह्मभूपति र्जगति ॥ ॥ २० ॥
कीर्ति र्यस्य विधत्ते किरणै श्चान्द्रैः कचाकचि क्रीडाम् ।
तेजोऽपि समं तनुते तरणेः किरणै स्तलातलिविलासम् ॥ २१ ॥

## कविवंशानुवर्णनम्

तस्याऽस्थानीमण्टपकमलाकरकेळिलोलकलहंसैः ।
अमलै र्विद्वद्रत्नै रलङ्कृते काश्यप कळाकुशलैः ॥ ॥ २२ ॥
श्रीमदहोबलनरहरिकरुणापाङ्गै स्तरिङ्गिताभ्युदये ।
श्रीवट्टिवल्लेवंशे विख्याते क्षितितळे महाविमले ॥ ॥ २३ ॥
अजनिष्ट वीरराघवभट्टाचार्य स्समस्तशास्त्रज्ञः ।
वाराणस्यां जीवित मनय च्छास्त्रप्रवचन मातन्वन् ॥ ॥ २४ ॥
नागोजीविठरमहोपाध्यायप्राणिनाथ आचार्यः ।
हनुमत्त्र्यम्बकमुख्या यस्य च शिष्यप्रशिष्यपदभाजः ॥ ॥ २५ ॥
तत्तनयेषु प्रथम स्सकलदिगन्तप्रसिद्धपृथुकीर्तिः ।
आसीत्काशीनाथ स्तर्कालङ्कारवागीशः ॥ ॥ २६ ॥
दुर्वादमुखरतार्किकगर्वोदयपर्वतौघदम्भोळिः ।
गीर्वहति स्म तदीया गीर्वाणतरङ्गिणीतरङ्गतुलाम् ॥ ॥ २७ ॥

तस्याऽभूदनुजन्मा साम्बशिवस्सकलशास्त्रनिष्णातः ।
वीरेश्वर इति तनय स्तस्याऽजनि तादृशः कळानिचये ॥ २८ ॥

तस्मा ज्जातोऽस्ति बुध स्साम्बशिवो विदितसाहितीसारः;
सोऽयं वेङ्कटलक्ष्म्यां नरकण्ठीरव मजीजन त्तनयम् ॥ ॥ २९ ॥

तनुते स एष सुहृदां प्रेरणया न तु कवित्वदर्पेण ।
अभिनववासवदत्तां पद्यमयीं सुभगसन्दर्भाम् ॥ ॥ ३० ॥

## स्वविनयप्रख्यापनम्

क्व नु वचसा मुल्लासः कविकुलचूडामणे स्सुबन्धुकवेः ।
क्वाऽहं जनोऽनभिज्ञः क्व नु मति रल्पीयसी च मम ॥ ॥ ३१ ॥

यद्वा दयारसार्द्रैः कटाक्षवीक्षाभरै र्गिरां देव्याः ।
समुपेयुषः प्रसादं जगतां त्रितयेऽपि किं न्वसाध्यं मे ॥ ॥ ३२ ॥

यद्यऽपि सन्त्यतिकुशला स्सन्त्यऽपि तेषां निबन्धनानि भृशम् ।
गृह्णन्त्विमं प्रबन्धं तथाऽपि सुधियो मयि प्रसन्नदृशः ॥ ॥ ३३ ॥

शृण्वन्तु शिशोऽरपि मे सूक्ति सुभगा सुधामुच सन्तः ।
अपि जगति रसोल्लसितां शुकस्य वाच न क श्शृणुते ॥ ३४ ॥

## कथाप्रारम्भः

आसी दशेषमहिमा महिमानितगुणगणोज्ज्वल श्श्रीमान् ।
नाम्ना वितरणभूम्ना चिन्तामणिरिति महीपतिः प्रथितः ॥ ३५ ॥

सकलोर्वीपतिमण्डलचूडामणिशाणकोणकषणेन ।
विमलीकृता यदीया राजति पदपद्मनखरमणिराजिः ॥ ॥ ३६ ॥

अहितकुलधूमकेतु र्महिततनूकान्तिहसितझषकेतुः ।
कन्दर्पकेतु रभव त्तनयो विनयोज्ज्वल स्तस्य ॥ ॥ ३७ ॥

अथ जातुचि दस्ताचलमस्तक मवतरति कुमुदिनीकान्ते ।
मारातपत्रकान्ते दूराध्वविलङ्घिना दिव श्रान्ते ॥ ॥ ३८ ॥

## Samskritha Bhasha Pracharini Sabha,

### Anubandha Sabha, GUDUR, Nellore Dt.

LIST OF LIFE MEMBERS

| | | |
|---|---|---|
| 1. | Sri C. V. Krishnaiah<br>Premiar Mica company, Gudur, Nellore Dt. | 116 00 |
| 2. | Dr. K. Seetharamaiah<br>Ramalayam St. Gudur. | 25 00 |
| 3. | Dr. C. R. Reddy, Gudur. | 25 00 |
| 4. | M. Leelamohan, B.A., B.L.<br>Advocate, Gudur. | 25 00 |
| 5. | Batthena Raghavaiah<br>Mittapalem, Gudur. | 25 00 |
| 6. | K. V. Ramanaiah<br>Bhavani Silk Stores, Raja St. Gudur | 25 00 |
| 7. | K. Sathyanarayana<br>Sanjeevi Stores, Gudur. | 25 00 |
| 8. | J. Seshasayana Rao<br>Sub-Registrar, Gudur. | 25 00 |
| 9. | C. Chandrasekharam<br>Vani Textiles, Raja St, Gudur. | 25 00 |
| 10. | M. Sreenivasulu Reddy<br>L. T. Asst., Z. P. High School, (Boys) Gudur. | 25 00 |
| 11. | Rokkam Ramanaiah<br>Gopalakrishna Rice Mill, Gudur | 25 00 |
| 12. | Guduru Veeraraghava Reddy<br>Thyagaraja St. Gudur. | 25 00 |
| 13. | K. L. Narasa Reddy, Gudur. | 25 00 |
| 14. | Amara Dasaratha Ramaiah, B.A., B.L.<br>Chennur, Gudur (Tq.) Nellore Dt. | 25 00 |
| 15. | C. V. Seshaiah,<br>Secretary, Devine life Society, Gudur. | 25 00 |

[P.T.O.]

| | | |
|---|---|---|
| 16. | Dr. V. Narayana Rao, M.B.B.S.,<br>Ry. Hospital, Gudur. (Ry. Station) | 25 00 |
| 17. | Dr. B. Gangadhara Reddy, M.B.B.S.,<br>Gudur. | 25 00 |
| 18. | R. Suseela Raghavulu<br>Samskrutha Pathasala, Janakirampeta, Gudur. | 25 00 |
| 19. | N. V. Krishnaiah, Manager,<br>Universal Enterprises, Gudur, (Nl. Dt.) | 25 00 |
| 20. | Nakka Vasudevaiah<br>7/95, Bazaar St, Gudur. | 25 00 |
| 21. | C Venkateswara Reddy<br>Himalaya Mica company, Gudur. | 25 00 |
| 22. | R. V. Raghavulu,<br>Snperintendent, S.K.R. Govt. College, Gudur. | 25 00 |
| 23. | B. Rangachary<br>Telugu Pandit, Z. P. H. School, Gudur. | 25 00 |

---

Please mention your membership Number for easy correspondence.

*R. N. 1845/60.* ***Postal*** *C. T. R. 11.*
आन्ध्रप्रदेशसर्वकारेणानुमोदिता R. C. No. 27-A 3/65 Dated 14-7-65.
Licensed to Post without Prepayment. LICENCE No. 57.

भारतसर्वकारेण पुरस्कृता च

# गैर्वाणी

वार्षिकम् ५-००

## प्रहेलिका

जले जाता नाहं कमलतनया लोकजननी
मरीचिर्नो भानुः पथि पथि विराजे न पथिका ।
मदीयं साहाय्यं जनसमुदयो वांछति सदा
प्रभावश्चात्यंतं समितिषु सदा मां वद सुधीः ॥

( विद्युत् )

**Published by Sri N. Ramanatha Aiyer B. A; B. L., Advocate & Secretary S. B. P. Sabha, Chittoor (A. P.)**
**Printed by Sri K. V. Raghavan, (in-charge) at Vijaya Press, Chittoor (A. P.) C. 1500.**